भूमिप तव धर्मफलेन जय धरणीशपते
खेचरभूप जय धरणीशपते ॥ *७ ॥

भुवि धृतसुरपतिलीलापात्र वरिष्ठ
भवसि महाबल पुण्यगरिष्ठ ।
भूमिप तव धर्मफलेन जय धरणीशपते
खेचरभूप जय धरणीशपते ॥ *८ ॥

एकान्तशून्यादिमताधिरूढान्
सोद्दिष्टसद्धर्मनिरासवादान् ।
तान्मन्त्रिपाशान् सुजिगाय वादैः
सद्धेतुभूतैः सचिवाग्रणी सः ॥ ५

इति निजपतिमोहं वारयित्वा बुधेश
समगतसचिवानां मानभङ्गं विधाय ।
अभिमतफलसिद्धो मन्दरागेन्द्रराज-
ज्जिनपतिसदनानि प्रार्चितुं सजगाम ॥ ६

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ गीतवीतरागे
महाबलस्य सद्धर्मप्रशंसाविवरणो नाम
प्रथम प्रबन्ध ॥१॥

## [ २ ]

वन्दित्वा च जिनालयानुपगतौ योगीश्वरौ पृच्छय च
प्राग्जन्माश्रितभोगगृद्धिजनितं सर्वं निदानं प्रभोः ।
एष्यज्जन्मनि भारते पुरुजिनेशित्व सुरेन्द्रार्च्यकं
श्रुत्वात्यल्पकजीवितं च स पुनः प्रत्यागमत्स्वं पुरम् ॥ १

गत्वा तमभ्येत्य सुरेन्द्रलीलं
महाबलं भोगसुखातिलोलम्[१] ।
उदग्रसौधाग्रगतं सुशीलं
ददर्श मन्त्रिः प्रतिबोधनार्थम् ॥ २

कुमतिसचिववर्गैः कर्दमे पातितं तै
सुरुचिरमणिपीठे स्थापितं स्वं त्वया वै ।
विगतकिरणदीपं स्वप्नके वीक्ष्य राजा
गतदिनपरयामे[२] वर्तते त्वां विलोकी[३] ॥ ३

मन्दप्रभाभासितदीपदृष्टे-
र्मासावशिष्टायुरभून्नरेन्द्रः ।
श्रीतीर्थदेवो भविता तमेत्य
संबोधयेति व्रतिपो जगाद ॥ ४

[४]श्रितरमणीस्तनमण्डल नवकुण्डलं
विततललितनवमालाम्[५] ।
त्यज मम देव नृप राजाधिप
त्यज मम देव नृप ॥ *१ ॥ ध्रुवपदम् ।

घनमणिमण्डलमण्डनं सुखखण्डनं
जनपदनिजजनरञ्जनम् ।

---

१) M सुखादिलोल ।

२) परयामे = चरमयामे ।

३) M विलोके ।

४) AS गूर्जरी रागे, B रागगुज्जरि-अष्टक, M रागभैरवि ॥ ताळ-त्रिवुडे ।

५) B लुलित for ललित ।

त्यज मम देव नृप राजाधिप
त्यज मम देव नृप ॥ *२ ॥

परिजनपुरजनसेवनं निजपावन
निरुपमसुखतरुलावनम्[६] ।
त्यज मम देव नृप राजाधिप
त्यज मम देव नृप ॥ *३ ॥

अभिनवयौवनसुन्दर कफमन्दिर[७]
इभगतिस्त्रीजनकन्धरम् ।
त्यज मम देव नृप राजाधिप
त्यज मम देव नृप ॥ *४ ॥

अमलनलिनदललोचनां सुखमोचना-
ममितदुरितभवचायनाम्[८] ।
त्यज मम देव नृप राजाधिप
त्यज मम देव नृप ॥ *५ ॥

सुरुचिरशुभवृषनाशनं दुरिताशनं
पुरुकुलमाननिधानम् ।
त्यज मम देव नृप राजाधिप
त्यज मम देव नृप ॥ *६ ॥

समवनिताकृतभूषणं शिवदूषणं
समररिपुविहितरोषणम् ।

---

६) √लू to cut ।
७) कफ = श्लेष्मन् ।
८) चायनाम् = विस्तारकारकाम् ।

त्यज मम देव नृप राजाधिप
त्यज मम देव नृप ॥ *७ ॥

तव निकटे सुहिता वयमिति भावय
शिवकुशले मतिमानय ।
त्यज मम देव नृप राजाधिप
त्यज मम देव नृप ॥ *८ ॥

इति निजसचिवोक्तं पथ्यमाध्याय चित्ते
सपदि तनयवर्ये क्षिप्तसाम्राज्यभार ।
सकलभुवनवन्द्यां प्राप्य सल्लेखनां वै
दिविजपललिताङ्गो ऽजायतैशानकल्पे ॥ ५

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ गीत-
वीतरागे महाबलस्य वैराग्योत्पादनो नाम
द्वितीयः प्रबन्ध ॥२॥

## [ ३ ]

ईशाने निजनन्दने कुलगिरौ मेरौ च वक्षारके
जम्बूशाल्मलिभूरुहाद्युपवने नन्दीश्वरे कुण्डले ।
इष्वाकारगिरौ स्वयम्भुरमणे जायासमेत सदा
क्रीडार्थं विजहार देवललिताङ्गो गीतगोष्ठ्यादिभिः ॥ १

[1]सुललितचन्दनपल्लवसंगमकोमलकमलसमीरे
[2]अलिकुलविमिलितकोकिलकूजितमेरुनिकुञ्जकुटीरे ।

---

१) AS वसंतरागे, B राग-वसत भैरवि, M राग-वसन्त ।
२) BMS° विमलित° ।

व्यवहरदतिसुरभिभरितवसन्ते[3]
नर्तनसक्तजनेन समं निजविरहिसुरस्य दुरन्ते ॥ *१ ॥
ध्रुवपदम् ।

उन्नतमदनमनोहरविहरवधूजनजनितविलापे[4]
[5]सन्नतमधुकरसुमसमवायनिराकुलबकुलकलापे ।
व्यवहरदतिसुरभिभरितवसन्ते
नर्तनसक्तजनेन समं निजविरहिसुरस्य दुरन्ते ॥ *२ ॥

द्विरदसमूहसुमृगमदनिभगुणसुषमतमालकमाले
स्मरवशचित्तविभेदनमदननखरसमकिंशुकजाले[6] ।
व्यवहरदतिसुरभिभरितवसन्ते
नर्तनसक्तजनेन समं निजविरहिसुरस्य दुरन्ते ॥ *३ ॥

मनसिजपरिवृढहैमगदानिभचम्पकपुष्पविकासे[7]
विनतेन्दिन्दिरपाटलिविसरकृतातनुतूणविभासे[8] ।
व्यवहरदतिसुरभिभरितवसन्ते
नर्तनसक्तजनेन समं निजविरहिसुरस्य दुरन्ते ॥ *४ ॥

रतिपतिभूपतिचामरततिनिभविदलितकुसुमरसाले
अतिसुरभीकृतदिग्वनितामुखमलयजपङ्क्तिविशाले ।

---

३) S व्यवहृदघति ।
४) M-reading कलापे ।
५) सुमम् = पुष्पम् ।
६) B भेदनमन्मथसखिसम ।
७) हैम-गदा-निभ ।
८) कृत-अतनु-तूण ।

व्यहरदतिसुरभिभरितवसन्ते
नर्तनसक्तजनेन समं निजविरहिसुरस्य दुरन्ते ॥ *५ ॥

कामिविदारणक्रकचमुखाकृतिकेतकिदन्तुरितान्ते
कोमलकिसलयनिचितसुमञ्जुलभूरुहनिवहसुकान्ते ।
व्यहरदतिसुरभिभरितवसन्ते
नर्तनसक्तजनेन समं निजविरहिसुरस्य दुरन्ते ॥ *६ ॥

सुरभिभरितकुसुमासवलघुसरिदभिनतभृङ्गकदम्बे
सुरसविधृतफलनिकरकलितजम्बूधरणिरुहनिकुरुम्बे[1] ।
व्यहरदतिसुरभिभरितवसन्ते
नर्तनसक्तजनेन समं निजविरहिसुरस्य दुरन्ते ॥ *७ ॥

सुरगिरिनन्दनप्रभृतिमनोहरविलसदुद्यानसंघाते
सुरपरिवृतललिताङ्गसुरो दिविजोत्तमविहरणपूते ।
व्यहरदतिसुरभिभरितवसन्ते
नर्तनसक्तजनेन समं निजविरहिसुरस्य दुरन्ते ॥ *८ ॥

स्वयंप्रभावक्त्रसरोजभृङ्गो
भुञ्जन्यथेष्टं दिविजातभोगान् ।
सत्यज्य देहं सुरदम्पती तौ
बभूवतु पूर्वविदेहदेशे ॥ २

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ गीत-
वीतरागे ललिताङ्गस्य वनविहारवर्णनो नाम
तृतीय प्रबन्ध ॥३॥

---

१) H धरणीनिकुरुबे ।

[ ४ ]

वत्यन्ते पुष्कलाख्ये ललितकुमुदसत्खेटसंज्ञे पुरेऽभूद्
भूमीशो वज्रजङ्घो विमलसुचरितः सर्वसौन्दर्यवर्यः ।
जाता तत्रैव कन्या गुणमणिनिकरा पुण्डरीकिण्यभिख्ये
चक्रेशस्यात्मजा सा सुरवरवनिता श्रीमतीति प्रवित्ता[1] ॥ १

शशधरसितसौधे निद्रिता सा निशायां
दिविजपटहरावं श्रूयमाणा शुभाङ्गी ।
अपरिमितगमूर्च्छा ज्ञातपूर्वप्रपञ्चा
व्यलपदमितदुःखा पण्डिताभिख्ययामा[2] ॥ २

[3]चन्दनलिप्तसुवर्णशरीरसुधौतवसनधरधीरं
मन्दरशिखरनिभामलमणियुतसन्नुतमकुटमुदारम् ।
कथमिह लप्स्ये दिविजवरं
मानिनि मन्मथकेलिपरम् ॥ *१ ॥

इन्दुरविद्वयनिभमणिकुण्डलमण्डितगण्डयुगेशं
[4]चन्दिरदलसमनिटिलविराजितसुन्दरतिलकसुकेशम् ।
कथमिह लप्स्ये दिविजवर
मानिनि मन्मथकेलिपरम् ॥ *२ ॥

---

१) प्रवित्ता = प्रसिद्धा ।

२) अमा = सह ।

३) A रामक्रियारागे । यतिताळे । B रागकेतारगौळ ।, M रागवसन्त-गुर्जरि, S रावक्रियारागे ।

४) चन्दिर=चन्द्र ।

शारदशशधरवदखिलह्लादनकारकवदनसुकान्तं
भूरिमनोहरनर्मकथनरसस्यन्दिलपनवरशान्तम् ।
कथमिह लप्स्ये दिविजवरं
मानिनि मन्मथकेलिपरम् ।। *३ ।।

केलिरणन्मणिगणघृणिरञ्जितहारकदम्बकभानं
बालदिवाकरकाशविभूषणशोभितवत्सधरेनम्[5] ।
कथमिह लप्स्ये दिविजवरं
मानिनि मन्मथकेलिपरम् ।। *४ ।।

विविधमणिरचितभूषणभूषितकोमलतरभुजदण्डं
सुविशदसदमलसरसगुणनिकरनिधिनिक्षेपकरण्डम् ।
कथमिह लप्स्ये दिविजवरं
मानिनि मन्मथकेलिपरम् ।। *५ ।।

स्फुरदन्त्यकाञ्चनविरचितरसनाविवलितमध्यशरीरं
वरवज्रसारशिरीषसुकोमलवामजङ्घोरुयुगेरम् ।
कथमिह लप्स्ये दिविजवरं
मानिनि मन्मथकेलिपरम् ।। *६ ।।

मृदुलसरलतलचलनविलोलितविमलकमलसमपादं
सदमलचेलसदञ्चलचञ्चलमञ्जुलकेलिविनोदम् ।
कथमिह लप्स्ये दिविजवरं
मानिनि मन्मथकेलिपरम् ।। *७ ।।

योजनपरिमितदिक्सुरभीकृतदेहभृदभिनवकामं
व्याजरहितनवरसभरितामरभोगपयोनिधिसोमम् ।

---

५) वत्सधर + इनम् ।

कथमिह लप्स्ये द्विविजवरं
मानिनिमन्मथकेलिपरम् ॥ *८ ॥

इन्दुर्घर्मकरायते प्रियतमे वायुश्च हीरायते[६]
लेपो ऽपि[७] ज्वलनायते कुसुमसन्माला ऽहिजालायते[८] ।
आवासो गहनायते स्मरवशाद्देहो ऽपि कारायते
हा कष्टं पतिविप्रयोगसमय. संवर्तवेलायते ॥ ३

इति निजहृदयस्थं सम्यगावेद्य सर्वं
मम पतिललिताङ्गे मेलनं प्रापयेति ।
गतभवचरितार्थं पट्टके सविलिख्य
सकलगुणसमृद्धे प्रार्थये पण्डिते त्वाम् ॥ ४

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ गीत-
वीतरागे श्रीमतीजातिस्मरणवर्णनो नाम
चतुर्थः प्रबन्धः ॥४॥

[ ५ ]

सुकविविमलबुद्धिः श्लिष्टमर्थं[१] वृणोति
सुनयविहितराज्य श्रीरवाप्नोति यद्वत् ।
नलिनसुभगनेत्रे मेलयिष्यामि तद्वत्
पतिमिह तव कन्ये मा कृथास्त्व विषादम् ॥ १

---

६) हीरायते = वज्रायते

७) B गन्धो ऽपि, H दीपो ऽपि for लेपो ऽपि

८) The second parts of lines two and three are inter-changed in some MSS.

१) BM श्लिष्टमर्थं ।

तयार्पितं पट्टकमाददाना
सखीष्टकार्यानयनात्तचित्ता ।
उत्तुङ्गसौधोत्पलखेटकाख्ये
प्रापन्महापूतजिनालयं सा ॥ २

श्रीवज्रजङ्घो नरनाथपुत्रो
जिनालयं प्राप तु वन्दनार्थम् ।
तत्पट्टकं वीक्ष्य मुमोह पश्चा-
त्तत्पट्टकार्थं समुवोचदित्थम् ॥ ३

[2]श्रीप्रभनामविमानसुभास्वरदेशविभागविलासं
दीप्रकनीलपिनद्धमदङ्गणमेदुरभूमिविभासम् ।
ब्रूहि व्यलिखदिह का हि विकासं
स्मरति मनो मम विहितविरासम्[3] ॥ *१ ॥ ध्रुवपदम्

श्रीप्रभपतिनिकटस्थमनोहरनारीरूपमुदारं
सुप्रभकिसलयकल्पमहीरुहवीथीनिवहविहारम् ।
ब्रूहि व्यलिखदिह का हि विकासं
स्मरति मनो मम विहितविरासम् ॥ *२ ॥

सरसिजकुवलयकुसुमविराजितकेलिसरोवरतीर
मरकतमणिचयविरचितरुचिमयडोलागेहसुवारम्[4] ।
ब्रूहि व्यलिखदिह का हि विकासं
स्मरति मनो मम विहितविरासम् ॥ *३ ॥

---

२) A धन्यासि रागे; B राग-शङ्कराभरण, M राग-मुखरि, S धन्यासि रागे ।

३) विरास = प्रकाशयुक्तम् ।

४) सुवार = सुखमूहम् ।

मण्डपपल्लवतोरणमण्डलशोभितकृतगिरिजालं
खण्डितवनिताकृतककलहभावमण्डितविमुखविशालम् ।
ब्रूहि व्यलिखदिह का हि विकासं
स्मरति मनो मम विहितविरासम् ॥ *४ ॥

सुरगिरितटमणिरुचिगणयवनिकाव्यवहितदम्पतिरूपं
सरसजनितकोपयुवतिचरणहतिगिरितटगुल्मकलापम् ।
ब्रूहि व्यलिखदिह का हि विकासं
स्मरति मनो मम विहितविरासम् ॥ *५ ॥

मामभिरञ्जितुमानतमस्तकराजितवनितालीलं[५]
कोमलतरचरणौ मम नन्दितुमानमदबलाखेलम्[६] ।
ब्रूहि व्यलिखदिह का हि विकासं
स्मरति मनो मम विहितविरासम् ॥ *६ ॥

अच्युतकल्पसुरेन्द्रकृतादरलब्धसन्मानविस्तारं
अर्चितमेरुनगादिजिनगृहवन्दनगमनविचारम् ।
ब्रूहि व्यलिखदिह का हि विकास
स्मरति मनो मम विहितविरासम् ॥ *७ ॥

उरसि मम विहितचरणसुलाञ्छनविरहितसकलविनोदं
चरणसरोजे नतमकुटं मां त्यक्त्वा सरससुमोदम् ।
ब्रूहि व्यलिखदिह का हि विकासं
स्मरति मनो मम विहितविरासम् ॥ *८ ॥

---

५) A लीला ।
६) AM खेलाम् ।

श्रीवज्रदन्ताख्यनरेन्द्रपुत्री
त्वयोक्तजन्मान्तरसत्कलत्रम् ।
श्रीमत्यभिख्या गुणरत्नपात्रं
पैतृष्वसेयी लिखितात्र चित्रम् ॥ ४

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ गीत-
वीतरागे वज्रजङ्घपट्टकार्थविवरणो नाम
पञ्चम प्रबन्ध. ॥५॥

[ ६ ]

गतभवमिलितां तां वज्रदन्तात्मजातां
विरहदहनदग्धां श्रीमतीं प्रौढकान्ताम्[1] ।
त्वदभिगमनलीनालोचन प्रार्थ्यमानां
सपदि सुभग गत्वा खण्डितां रक्ष भूप ॥ १

[2]सेवितां नवयौवनायतरूपकान्तिचयेन
आवृतां निजदेहभानुविसारणावरणेन ।
धर धर कृतादरमानसेन ॥ *१ ॥

राजितां जितवञ्जुलामलपादपल्लवकेन
भ्राजितां भ्रमरालिसेवितपादपद्मयुगेन ।
धर धर कृतादरमानसेन ॥ *२ ॥

भासितां धृतमारबाणधिजानुयुग्मधरेण
काशितां स्मरहस्तिदन्तनिभोरुरूपवरेण ।
धर धर कृतादरमानसेन ॥ *३ ॥

---

१) B मोहकान्ताम् ।

२) AS माळव गौडरागे , B राग-कल्याणि, M राग-काम्भोदि ।

संगतां सिकताचयाभसुमध्यशोभनकेन
अङ्कितां सुशिरीषपुष्पमृदूढबाहुशुभेन ॥
धर धर कृतादरमानसेन ॥ *४ ॥

नन्दितां स्मरपूर्णकुम्भपयोधरातिशयेन
सौन्दरां नयनद्वयाञ्चितवक्त्रपद्मसुमेन ।
धर धर कृतादरमानसेन ॥ *५ ॥

भूषितां मुखवासनाधृतनासिकाविभवेन[3] ।
योषितां[४] मणिमुत्पलाङ्कितकर्मकान्तिततेन ।
धर धर कृतादरमानसेन ॥ *६ ॥

लालितां शशिखण्डसंनिभकान्तिसंनिटिलेन
लोलितामलिनीलकुन्तलग्रन्थिकारचनेन ।
धर धर कृतादरमानसेन ॥ *७ ॥

कामिनीं धृतहारनूपुरचारुभूषगणेन
श्रीमतीं सकलाभिरामकसाधुभूरिगुणेन ।
धर धर कृतादरमानसेन ॥ *८ ॥

चूताशोकसुमल्लिकाब्जकुमुदव्रातप्रफुल्लप्रसू-
नौघासादिततिग्मसायकचयान्प्राणोपहारोद्यतान् ।
भृङ्गारब्धसुझंकृतान्विषमगान्मारोपय त्वं वृथा
चापे पुष्पमये मनोभव मका विज्ञाप्यते ऽद्य प्रभो ॥ २

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ गीत-
वीतरागे वज्रजङ्घस्य श्रीमतीसौरूप्यवर्णनो नाम
षष्ठ प्रबन्ध ॥६॥

---

३) वासना + अधृत ।
४) B मुख for मणि ।

# [ ७ ]

तत्रैव चैत्यालयपट्टशाला-
मध्यासितं विश्रममानसं तम् ।
व्योमावतीर्णं त्विव वज्रजङ्घं
सा पण्डितार्पीत्थमुवाच वाणीम् ॥१

कुण्डलिमण्डलमण्डितविषमिव दण्डयतीह समीरं
चण्डयते ऽखण्डमण्डलविधुमिव पिण्डितचन्दनसारम् ।
तव विरहे सा मुग्धा भूमिप[2] तव विरहे सा मुग्धा
भूमिप कामकलम्बदरादिवि[3] चिन्तनया त्वयि स्निग्धा ॥*१॥

संततविरचितसुमनशरादिव तव शरणे सुविलोलं
स्वान्तजमर्मणि वर्म तनोति स शरशरजच्छदजालम्[4] ।
तव विरहे सा मुग्धा भूमिप तव विरहे सा मुग्धा
भूमिप कामकलम्बदरादिव चिन्तनया त्वयि स्निग्धा ॥ *२ ॥

अमितसुमनशररचितसुतल्पं लास्यकलाकमनीयं
यममिव तव सुखमनुभवनाय तनोति सुमनशयनीयम् ।
तव विरहे सा मुग्धा भूमिप तव विरहे सा मुग्धा
भूमिप कामकलम्बदरादिव चिन्तनया त्वयि स्निग्धा ॥ *३ ॥

---

१) A गूर्जरे रागे, B राग कावेरी, M राग पतुवराळि, S अथ गुर्जरि रागे यति ताळे ।

२) AMS भूप for भूमिप ।

३) कलम्बदरात् = बाणभयात् ।

४) शरशरज = बाणकमलम् ।

धरति विकम्पितलोचनजलवहमानननलिनमधीरं
सरसिजमिव नलिनी रजनीपिहितहिमनिकरजलधारम् ।
तव विरहे सा मुग्धा भूमिप तव विरहे सा मुग्धा
भूमिप कामकलम्बदरादिव चिन्तनया त्वयि स्निग्धा ॥ *४ ॥

वहति विलसदतिविरहदहनभरश्यामलमुखमविकाशं
तुहिनकिरणमुपरागपिहितमिव क्षणदा५ विगतविभासम् ।
तव विरहे सा मुग्धा भूमिप तव विरहे सा मुग्धा
भूमिप कामकलम्बदरादिव चिन्तनया त्वयि स्निग्धा ॥ *५ ॥

स्वपति सुकिसलयविरचितशयने मृदुविन्यस्तशरीरा
स्वपति विरहदुःखसहनविशक्तेवाग्निनिविष्टाधीरा६ ।
तव विरहे सा मुग्धा भूमिप तव विरहे सा मुग्धा
भूमिप कामकलम्बदरादिव चिन्तनया त्वयि स्निग्धा ॥ *६ ॥

अभिमतगीतमणितुमतिसौन्दरपरिवादनीमादाय
नभसि शशिनमभिवीक्ष्य जहासीद्वीणामेणभयाय ।
तव विरहे सा मुग्धा भूमिप तव विरहे सा मुग्धा
भूमिप कामकलम्बदरादिव चिन्तनया त्वयि स्निग्धा ॥ *७ ॥

अनुदिनमपि तव पतिना पावनमृदुतरपादसरोजे
मनसिजनिभभवदमलगुणौघं ध्यायति हृदयपयोजे ।
तव विरहे सा मुग्धा भूमिप तव विरहे सा मुग्धा
भूमिप कामकलम्बदरादिव चिन्तनया त्वयि स्निग्धा ॥ *८ ॥

---

५) क्षणदा = रात्रि ।

६) निविष्टा + अधीरा ।

इति निजनिपुणोक्त्या वज्रजङ्घं प्रसाद्य
पुनरपि रसयुक्तं पट्टकं तेन दत्तम् ।
अधिकभरितमोदा स्वीकृता सावधाना
लघु निजपुरमित्वा कन्यकायै स्म दत्ते ॥ २

तं दृष्ट्वा चिरमाकलय्य पुलकव्याप्ताङ्गयष्टिर्मुदा
तुष्टावेति निजात्मरक्षणपरां तां पण्डितां श्रीमती ।
दुग्धक्षीरकुचप्रवेशनिपुणे स्त्रीरूपसंधारित-
प्रज्ञे कौशलभूमिके मम पतेरन्वेषणे तत्परे ॥ ३

षटखण्डाधिपते मदीयतनयश्रीवज्रजङ्घाय ते
स्वस्रीयाय सुवज्रबाहुरवदद्देहीति तां श्रीमतीम् ।
तन्त्छ्रुत्वा निजचेतसि स्थितमिदं पृष्ट त्वया साध्विति
चक्री प्रीणितमानस: सुभगजामात्रे ददौ कन्यकाम् ॥ ४

जन्मान्तरप्रेमनिविष्टगात्रौ
सुरूपलावण्यकलापपात्रौ ।
परिस्फुरत्पद्मदलाभनेत्रौ
सुरेजतु: कामनिरेकसूत्रौ [७] ॥ ५

वल्लीमण्डपशोभिते कृतगिरौ पद्माकरे कर्हिचि-
च्चूताशोकसुमल्लिकादिकुसुमैराक्रीडने क्रीडितौ ।
सर्वर्तुप्रथितोरुभोगनिचयैस्तृप्तेन्द्रियौ दम्पती
लेभाते तनयान्सुवीर्यविदितानष्टानवत्यामितान् ॥ ६ ॥

अधिपिहितगवाक्षे धूपिते शीतकाले
निबिडभरितधूमे वासगेहप्रसुप्ता ।

७) निरेक = नि सन्देह (?)

[८]वलितगलनधूमौ प्रापतुर्मृत्युमेतौ
मुनिपकशिपुदत्त्या प्राप्नुतां भोगभूमिम् ॥ ७

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे श्रीमतीविरहवर्णनो नाम
सप्तम प्रबन्ध ॥ ७ ॥

[ ८ ]

मेरोरुत्तरदिक्स्थिते कुरुवरक्षेत्रे सुभोगाकरे
जायेते स्म हि दम्पती सुरसमौ बालार्कचञ्चत्प्रभौ ।
केयूरप्रमुखोद्धभूषणधरौ सुव्यक्तवाग्भूषणौ
पूर्वोपार्जितपुण्यपाकजनितान्भोगानभुङ्क्तां सदा ॥ १

वरमणिविसरणकिरणविशाले[१]
सुररमणीयकवनघनजाले
राजित आर्य राजितो
राजितो विषये वरधीधर ॥ *१ ॥

सुरुचिरमणिखनिविनिगतमाने
मरकतततिधरदवनिविताने ।
राजित आर्य राजितो
राजितो विषये वरधीधर. ॥ *२ ॥

---

८) B विगत for वलित ।

१) A अष्टपद । कनडगौळरागे, B राग-बसत, H राग-देशाक्षि, S कनड-गौलिरागे ।

कनककमलसुमधूलिपिधाने
घनसदमलजलखातनिदाने ।
राजित आर्य राजितो
राजितो विषये वरधीधरः ॥ *३ ॥

कुसुमरसविधूतवातनिवासे
कुसुमितसुरतरुराजिविभासे ।
राजित आर्य राजितो
राजितो विषये वरधीधरः ॥ *४ ॥

अमृतसदृशरसधृतमदिराङ्गे
कमनमधुररवभृततूर्याङ्गे ।
राजित आर्य राजितो
राजितो विषये वरधीधरः ॥ *५ ॥

कटकमकुटचयचितभूषाङ्गे
स्फुटितकुसुमसुघटितमाल्याङ्गे ।
राजित आर्य राजितो
राजितो विषये वरधीधरः ॥ *६ ॥

निरसिततिमिरविसरदीपाङ्गे
वरविधुरविघृणिजितदीप्त्याङ्गे ।
राजित आर्य राजितो
राजितो विषये वरधीधरः ॥ *७ ॥

स[2]दनसदशनदगृहलेपाङ्गे
सदमलवितरणपटपात्राङ्गे ।

---

२) सद् + अशन + द ।

राजित आर्य राजितो
राजितो विषये वरधीधरः ॥ *८ ॥

एवंविधैर्भोगचयैरुपेतो
दशाङ्गकल्पद्रुमसप्रदत्तैः ।
कदाचिदार्यः सुरभूरुहाली
विहारयामास सुरेन्द्रलीलः ॥ २

प्रीतिकरं सुतपसं प्रियदेवसंज्ञ
चाकाशचारणमुनी परमावधीद्धौ ।
व्योमावतीर्णरविबिम्बनिभौ समीक्ष्य
भक्त्या प्रवन्द्य यतिपौ विनिवेश्य पीठे ॥ ३

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य
कृतौ गीतवीतरागे भोगभूमिवर्णनो
नामाष्टम प्रबन्ध ॥ ८ ॥

[ ९ ]

मुनिपतिमभिवीक्ष्य प्रेमबाष्पार्द्रनेत्रो
मुहुरपि तमपृच्छद् गद्गदोत्कण्ठवक्त्र ।
मुनिकुलतिलक त्व बान्धवो वा दृढ मे
वद विचलति चित्तं पृष्टवानित्थमार्य ॥ १

तच्छ्रुत्वा पुनरित्यवोचदमले वैद्याधरे जन्मनि
वत्स्यांव स्मरसि त्वमेव सचिव बुद्ध स्वय पूर्वकम् ।
मां जानाहि महाबलस्त्वमगम दातु सुधर्म तवे-
त्युक्त्वा मोक्षसुखप्रद सुविमल दत्त्वा ययौ सन्मुनि ॥ २

प्रीतिकरे मेघपथे गते ऽस्मिन्
स्मृत्वा पुनस्तस्य गुणान्विनीतान् ।
जायासमेतो ऽमलवाक्प्रसूनै-
स्तुष्टाव चार्य' सुगुणानुराग ॥ ३

अमलगुणभरसम्यक्त्वविकसनमुपलाति
समलविमीलितशङ्काङ्कुरकमपि लुनाति ।
सुजनसमागमलाभो
मम प्रेयसि समागमलाभो ॥ *१ ॥ ध्रुवपदम् ।

मलनिचिततनुकाक्षादलनमपि चिनोति
मिलितमुनिविचिकित्साकरणमवमिनोति ।
सुजनसमागमलाभा
मम प्रेयसि समागमलाभो ॥ *२ ॥

कुमतिजनितविमूढजननमपजहाति
श्रमणजनशबलाचारलवमपिदधाति ।
सुजनसमागमलाभो
मम प्रेयसि समागमलाभा ॥ *३ ॥

श्रुतधरसदमलाचारविनयमुपैति
यतिनिकरकृतवात्सल्यभरणमुपयाति ।
सुजनसमागमलाभो
मम प्रेयसि समागमलाभो ॥ *४ ॥

---

१) AS अ ( आ ) सावरि रागे, B राग-अठाण ।
२) B °मतिजहाति

परमजिनमतभासप्रवणमुपलिनाति
निरघसुखदमोक्षे निलयमभिवृणोति ।
सुजनसमागमलाभो
मम प्रेयसि समागमलाभो ।। *५ ।।

धरति शिवसुखसारे दुरितमपनिह्नाय
हरति हृदयनिवासे दवथुमपनीय ।
सुजनसमागमलाभो
मम प्रेयसि समागमलाभो ।। *६ ।।

सुरुचिरसुपरमानन्दथुमनुकरोति
भरितसुभगमनोवृत्तिकरमनुधिनोति ।
सुजनसमागमलाभो
मम प्रेयसि समागमलाभो ।। *७ ।।

सुजनसदसि योग्यत्वभरमपि ददाति
निजजनितशुभसौभाग्यधरमुपदधाति ।
सुजनसमागमलाभो
मम प्रेयसि समागमलाभो ।। *८ ।।

महाबले भोगसुखातिलोल
विनष्टसद्धर्मपथप्रविष्टे ।
सुरक्ष्य धर्मामृतदायको ऽद्य
समेत्य सन्मार्गमबोधयन्मे ।। ४

गुरुर्विधाता गुरुरेव दाता
गुरुः स्वबन्धुर्गुणरत्नसिन्धु ।
गुरुर्विनेता गुरुरेव तातो
गुरुर्विमोक्षो हतकर्मपक्षः ।। ५

निजगुरुपदपद्मं प्रेक्षमाणो मनोब्धे
दुरितजयजमोक्षस्थानसन्यस्तचित्तः ।
विमलतरसुदृष्टिं भावयन् जीवितान्ते
समजनि सुरलोके श्रीधरो देववर्यः ॥ ६ ॥

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे आर्यस्य गुरुगुणस्मरणवर्णनो
नाम नवम प्रबन्ध ॥ ९ ॥

## [ १० ]

ईशानकल्पे सुखदादनल्पे[1]
स श्रीधरः श्रीप्रभकाश्रयाने ।
सुप्तोत्थित वेत्यभिवीक्ष्यमाण
सुराः समीक्ष्याहुरुदारवाणीम् ॥ १ ॥

[2]शुभसुरलोके प्रभरितलोके [3]शुभतरपुण्यविपाक
अभिमतशोभ प्रमुतमलाभ प्रमुदितविश्वसुनाक ।
सुकलय देव प्रकटसुभाव स्मरसमरूपविभार
सुखपदजात सरसविनीत सरभसकार्यमुदार ॥*१॥ ध्रुवपदम्

---

१) सुखदात् + अनल्पे
२) A अष्टपद । देशवराळे रागे, B राग-मोहन, M राग-केदारि गौळ; S राग देशवराळि ।
३) M शुभकर ।

बन्धुरतीरे सौन्दरनीरे मन्दसुगन्धसमीरे
नन्दितसारे रुन्द्रगभीरे चन्द्रकिरणनिभगौरे ।
सुकलय देव प्रकटसुभाव स्मरसमरूपविभार
सुखपदजात सरसविनीत सरभसकार्यमुदार ॥ *२ ॥

परिमलभरिते ऽमृतजलनिचिते दरसुविदलितसरोजे
वरमणिकीलितमकुटविभूषित सरसि सवनमभिराजे
सुकलय देव प्रकटसुभाव स्मरसमरूपविभार
सुखपदजात सरसविनीत सरभसकार्यमुदार ॥ *३ ॥

उदकतरूद्भवसदमलरसनवदधिघृतक्षीरसमाजा
मुदितसुरौकप्रदलितशोकप्रदयकजिनपतिपूजाम ।
सुकलय देव प्रकटसुभाव स्मरसमरूपविभार
सुखपदजात सरसविनीत सरभसकार्यमुदार ॥ *४ ॥

सुरुचिरभावोत्करश्रितसेवा सुरततिविरचितसेनां
पुरुजिनमार्ग वरसुखसर्गे विरचितपुण्यविधानाम् ।
सुकलय देव प्रकटसुभाव स्मरसमरूपविभार
सुखपदजात सरसविनीत सरभसकार्यमुदार ॥ *५ ॥

भावजधीरभावितनाराचाविलुलितशुभगात्र
सेवितलेप पावनरूप जीवनजाननेत्र ।
सुकलय देव प्रकटसुभाव स्मरसमरूपविभार
सुखपदजात सरसविनीत सरभसकार्यमुदार ॥ *६ ॥

---

४) सुर + ओक ।

५) भावज = मन्मथ ।

६) जीवनज = कमलम् ।

पतिमतिरक्ति नुतवरशक्ति धृतनिजवल्लभिकालिः[७]
कृतशृङ्गार भृतभृङ्गार जितरनिसुभगसुलील ।
सुकलय देव प्रकटसुभाव स्मरसमरूपविभार
सुखपदजात सरसविनीत सरभसकार्यमुदार ॥ *७ ॥

मञ्जुलराव पुञ्जितभाव पञ्चितनृत्यविलास
रञ्जितवेषं सिञ्जितभूष कञ्जदलाक्षिविभासम् ।
सुकलय देव प्रकटसुभाव स्मरसमरूपविभार
सुखपदजात सरसविनीत सरभसकार्यमुदार ॥ *८ ॥

इत्थ सुरोक्त सकल विधाय
स श्रीधरस्तत्र सुखाब्धितीर्णः ।
च्युत्वा ततः पूर्वविदेहभूमौ
पुत्रः पवित्रः सुविधिर्बभूव ॥ २

देशे महावत्सविशिष्टनाम्नि
वरे सुसीमानगरे सुहृष्टेः ।
सौन्दर्यनन्दाख्यपतिवरायां
सल्लक्षणोपेतमनोहराङ्गः ॥ ३

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे श्रीधरस्य स्वर्गवैभववर्णनो
नाम दशमः प्रबन्ध ॥ १० ॥

---

७) वल्लभिका – आलि ।

[ ११ ]

ललितमृदुलगात्र सत्कलाराशिपात्रः
सरसिजदलनेत्र क्षत्रियः ख्यातगोत्रः ।
रिपुकुवलयमित्र पुण्डरीकाभवक्त्र
गुणमणिधृतसूत्रः सत्त्वरक्षाचरित्र ॥ १

स श्रीमान् सुविधिर्जगाम विमलेशस्यान्तिक वन्दितु
चक्रेशा निजमातुलेन सहस प्राच्यं प्रमोदावहः ।
दृष्ट्वा दीक्षितमातुल स्वयमतो दीक्षामवाप्तु स्थित
वाच सद्विनयान्वित स्वतनय प्रोवाच वै केशवम् ॥ २

धर्मकथनपरवचनविलास
निर्मलसुखकरज्ञानधरेश ।
यामि वन भो यामि वन
नन्दन राज्ये मतिमाधेहि ॥ *१ ॥ ध्रुवपदम् ।

सदमलचरितनिकरमणिहार
पदकमलविनतजनताधार ।
यामि वन भो यामि वन
नन्दन राज्ये मतिमाधेहि ॥ *२ ॥

अनुसरणयुतसुजनदिविजेन्द्र
कुनयसरणिरतकुजनयमेन्द्र ।
यामि वन भो यामि वन
नन्दन राज्ये मतिमाधेहि ॥ *३ ॥

---

१) A अष्टपद । गूर्ज्जरि रागे, B राग-मध्यमावति, S राग गुर्जरि रागे ।
२) कुजन-यमेन्द्र

स्वजनपदजनितसुसचिववर्ग
स्वजनितरिपुषड्वर्गविसर्ग ।
यामि वनं भो यामि वन
नन्दन राज्ये मतिमाधेहि ॥ *४ ॥

निजकुललसदसिजीवनलोल
विजितसकलरिपुरणमुखलील ।
यामि वन भो यामि वनं
नन्दन राज्ये मतिमाधेहि ॥ *५ ॥

धार्मिककुलचरणादिगुणाढ्य
निर्मदशमदधर्मधरेड्य ।
यामि वन भो यामि वनं
नन्दन राज्ये मतिमाधेहि ॥ *६ ॥

परिवृढसचिवोत्साहजशक्ते
करिरथहयनरवरबलशक्ते ।
यामि वनं भो यामि वनं
नन्दन राज्ये मतिमाधेहि ॥ *७ ॥

सुनयनिचययुतजनपदवर्य
जननयनवनजघनवनसूर्य ।
यामि वन भो यामि वनं
नन्दन राज्ये मतिमाधेहि ॥ *८ ॥

पित्रोक्तवाक्य विनिशम्य पुत्रो
राज्यं तवैतद्विषवद्विभाति ।

ममापि तद्वत्प्रतिभाति तात
त्व तिष्ठ सर्वामर्शे विशिष्टः ॥ ३

तिष्ठामि नो चेदहमेव नास्मी-
तीत्थं निजस्वान्तगत निवेद्य ।
स केशवो दारचरो व्यरसी-
त्पुत्रस्य मोहात्मदनीबभूव ॥ ४

एकादशोरुनिलयो विनिवृत्तसंग
कौपीनखण्डकधरो ऽतितप.कृशाङ्ग ।
अन्ते समाधिविधिमात्कृतदेहभार
कल्पे ऽच्युते दिविजमंघपतिर्बभूव ॥ ५

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे सुविधिपुत्रसबोधनो नामै-
कादश प्रबन्ध ॥ ११ ॥

[१२]

मरकतमणिमुख्यप्रोल्लसत्सर्वरत्नै-
रमलकनकपट्टरन्विते मञ्चयुग्मे ।
मृदुतरवरतल्पे दभ्रवस्त्रप्रसारे
सदमलमणिबिम्ब वा स्म संजायते स ॥ १

एव समुत्पन्नसुरेश्वरस्य
द्वाविंशतीद्वाम्बुधिजावितस्य ।

---

१) दभ्र = सूक्ष्म ।

तपोबलादार्जितपुण्यकस्य
शरीरमाभादतिसौन्दरं तत् ॥ २

[2] सुरतरुसुरभिभरितकुसुमवरमालिका
परमसुरगिरिशिखरनिभमकुटमौलिका ।
भाति हेममयधरणं[3] तनूघृणिजालिका ॥ ★१॥ ध्रुवपदम् ।

परमशुभतरुजनितफलसदृशमञ्जुला ऽऽ—
भरणनिकरकिरणसमूहबहुलोज्ज्वला ।
भाति हेममयधरणतनूघृणिजालिका ॥ ★२ ॥

सुरभिभरधृतकुसुमितसुरतरुभासिताऽ-
मरवृषभसुषमशुभलक्षणविभासिता ।
भाति हेममयधरणतनूघृणिजालिका ॥ ★३ ॥

अलिकुलकममलिनकुन्तलविभाजिता
अलिमिलितनलिननिभनयनमुखराजिता ।
भाति हेममयधरणतनूघृणिजालिका ॥ ★४ ॥

खरकिरणशशिकरनिभकर्णकुण्डला
शरदमलघनसदृशवरहारमण्डला ।
भाति हेममयधरणतनूघृणिजालिका ॥ ★५ ॥

कटककेयूरभूषितबाहुयुगलालिता
घटितलसदशुकाञ्चितजघनलोलिता ।
भाति हेममयधरणतनूघृणिजालिका ॥ ★६ ॥

---

२) A गुडक्रिय रागे । यति ताले, B राग-दर्बार, S गुडक्रि रागे ।
३) B विधृत for धरण ।

कनककदलीस्तम्भसदृशोरुसयुता
सुनखरुचिसलिलभवनलिनयुगचायिता ।
भाति हेममयधरणतनूघृणिजालिका ॥ *७ ॥

दिविजनारीनयनस्पर्शहृदयंगता
नवकान्तिविधृतदिविजेन्द्रेण सगता ।
भाति हेममयधरणतनूघृणिजालिका ॥ *८ ॥

सामानिकादिदशभेदसुरौघवन्द्यो
मित्रामरैः सहजभोगसुखाभिनन्द्य ।
पुण्यप्रभावजनिताम्बरभूषणाढ्यो
दिव्यां सुरेन्द्रपदवीं चिरमावसत्सः ॥ ३

सुललिततरवेषा दिव्ययोषाः सुभूषा
परिमलसुममाला शस्त्रखेला सुचेला ।
मृदुलरवनिलीनारब्धगाना' सुमाना
परमसुखनिधान निन्युरैन निर्जेनम् ॥ ४

कल्पे ऽच्युते कल्पतरूपशोभे
कल्पान्त्यजेन्द्रः प्रविभुज्य भोगान् ।
त्यक्त्वा स्वदेहं निजजीवितान्ते
श्रीवज्रनाभिर्जनपो ऽजनिष्ट ॥ ५

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे अच्युतेन्द्रदिव्यशरीरवर्णनो
नाम द्वादश प्रबन्ध ॥ १२ ॥

[ १३ ]

जम्बूमति द्वीपवरे विदेहे
प्रागाश्रिते धर्मधरोरुदेशे ।
सुपुष्कलावत्यभिधाप्रतीते
श्रीपुण्डरीकिण्यभवत्पुरी सा ॥ १

तद्राजधानीपतिवज्रसेना-
च्छ्रीकान्तिकायास्तनयोऽभिजज्ञे ।
वज्राङ्कुरालिङ्गितनिम्ननाभिः
स सार्वभौम क्षितिपाग्रगण्य ॥ २

[1]मदनमनोहरभरितसुयोषा
सदलिकुलमिलितपरिमलवेषा ।
काचिदमलगुणाकरा
युवती वरपतिमुदिता ॥ *१ ॥ ध्रुवपदम् ।

[2]इनघनसगमलसदधिकारा
स्तनयुगलोपरि विचलितहारा ।
काचिदमलगुणाकरा
युवती वरपतिमुदिता ॥ *२ ॥

कुटिलचलदलकनिटिलदलेन्दुः
पटुतरतोषजनितजलबिन्दु ।
काचिदमलगुणाकरा
युवती वरपतिमुदिता ॥ *३ ॥

---

१) A अष्टपद । पचमरागे, B राग–हसानदि; S राग । पचमरागे ।
२) इन = चक्रिन् ।

मण्डितकुण्डलमञ्जुकपोला
खण्डितहंसवधूगतिलीला ।
काचिदमलगुणाकरा
युवती वरपतिमुदिता ॥ *४ ॥

क्षितिपतिलोचनभाजनहसना
विततविकूजिततत्तियुतरसना ।
काचिदमलगुणाकरा
युवती वरपतिमुदिता ॥ *५ ॥

मलयजकल्कविलिप्तसदङ्गा
ललितजलजदलविचलदपाङ्गा ।
काचिदमलगुणाकरा
युवती वरपतिमुदिता ॥ *६ ॥

द्युतिचयनिचितसुमृदुतनुसारा
पतिमतिहितदगुणाब्धिगभीरा ।
काचिदमलगुणाकरा
युवती वरपतिमुदिता ॥ *७ ॥

अनघजिनपपदयजनविलोला
जिनमुनिजनपदविनमनशीला ।
काचिदमलगुणाकरा
युवती वरपतिमुदिता ॥ *८ ॥

विलुलितगुणसार सत्यवाणीसुधार
रिपुकुलबलदारो विश्वविद्याविचारः ।
जितसकलधरेरः पूर्णपुण्यानुसारः
शमितमदनघोर सार्वकारुण्यधारः ॥ ३

सुपूर्वपुण्यार्जितचक्रलाभः
षट्खण्डसीमाङ्कितराज्यभारः ।
दशाङ्गभोगाम्बुधिपूर्णचन्द्र
शक्रस्य लीलां नितरां बभार ॥ ४

जननमरणजात दुःखमालोच्य चित्ते
सुनयतनयवर्ये न्यस्तसाम्राज्यलक्ष्मीः ।
निजगुरुजिनपान्ते त्यक्तसर्वोपधि सन् ।
सकलभुवनवन्द्य जैनरूपं दधौ स ॥ ५

शस्तैः पञ्चमहाव्रतैः समितिभिः गुप्तित्रयेणापि च
युक्तः षोडशभावना जिनपतिश्रीपादमूले सदा ।
ध्यायस्तीर्थकरत्वपुण्यममल सपादयन्सन्मुनि-
स्त्यक्ताहारशरीरको यमधरः सर्वार्थसिद्धिं ययौ ॥ ६

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे वज्रनाभिस्त्रीवर्णनो नाम
त्रयोदश प्रबन्ध ॥ १३ ॥

## [ १४ ]

जम्बूवरद्वीपसमानमाने
द्युलोकसौधाग्रविराजमाने ।
ससारजीवाखिलसौख्यलीने
जज्ञे ऽहमिन्द्र परमे विमाने ॥ १

[1]विमिलितकिरणे समुदितरमणे सुरतनुघृणिवलये ।
सुमणिविरचिते शोभनभरिते सुभगविसरनिलये ।
रेमे सुरपो लसदवनौ सुवशी जिताङ्गजवरो । रेमे ॥ *१ ॥
ध्रुवपदम् ।

परिमलभरिते घृणिगणनिचिते तरलितमणिभासने
सुरतरुकुसुमे सदजिरसुषमे सुरततिनिवसासने ।
रेमे सुरपो लसदवनौ सुवशी जिताङ्गजवरो । रेमे ॥ *२ ॥

सुपिहितगगने सुरकुजगहने सुधवलरुचिरुषिते
अपगतमलिने ऽरुणमणिपुलिने सरसिजवनभूषिते ।
रेमे सुरपो लसदवनौ सुवशी जिताङ्गजवरो । रेमे ॥ *३ ॥

सुरपसमासेडितजिनवासे मुनिसमसुरमहिते
विरचितनाशे शिखरविभासे मरकतगिरिसहिते ।
रेमे सुरपो लसदवनौ सुवशी जिताङ्गजवरो । रेमे ॥ *४ ॥

मन्दसमीरे गन्धसधीरे सौन्दरजलविसरे
नन्दितसारे गन्धकुटीरानन्दशुनिकरभरे ॥
रेमे सुरपो लसदवनौ सुवशी जिताङ्गजवरो । रेमे ॥ *५ ॥

सरलसुधूपे वरमणिकुतुपे[2] सुररमणीयधरे
निरुपमलीने परमविशाले करजितशीतकरे ।
रेमे सुरपो लसदवनौ सुवशी जिताङ्गजवरो । रेमे ॥ *६ ॥

---

१) A अष्टपद, B राग–हिंदोळ ।
२) कुतुप, bed (?)

घ[3]नतरसाले कनकजनाले व[4]नितसदनसरले
अनघसुमाले सुनयनखेले दिनमणिनिभतरले ।
रेमे सुरपो लसदवनौ सुवशी जिताङ्गजवरो । रेमे ॥ *७ ॥

चरमविमाने विरहितमाने पुरुमणिचितशयने
सरिगमगाने सरसेशाने प[5]नितजिनपसदने ।
रेमे सुरपो लसदवनौ सुवशी जिताङ्गजवरो । रेमे ॥ *८ ॥

आहारदेहाभशरीरलीलो
मन्दारमालाञ्चितमूर्धचूल ।
शुक्लाख्यलेश्याहितचित्तशीलो
रेमेऽहमिन्द्रोऽमरसौख्यजालः ॥ २

रुचिरमणिसुवेषो निर्निमेषो वियोष.
परमसुखचयाढ्या नाकजेड्य सुरेड्य
सदमलतनुभानोऽनुत्तरेनः सुखेनो
व्यलसदखिलवर्यः शुद्धचर्यः सुवीर्यः ॥ ३

जीवाधिवासत्रसनाडिपूर्ण-
दिव्यावधिज्ञानसुविक्रियर्द्धिः ।
प्राग्जन्मसंपादितसार्वपुण्यः
षण्मासपूर्वं भुवमेष्यतीति ॥ ४

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे सर्वार्थसिद्धिविमानवर्णनो
नाम चतुर्दश प्रबन्ध ॥ १४ ॥

---

३) A-com घनतरसारे कनकजसारे ।

४) वनित = सगत ।

५) पनित = स्तुत ।

[ १५ ]

ज[1]म्बू द्रुमासजनभासमाने
द्वीपे शशाङ्कोज्ज्वलभागमाने।
सद्भारतक्षेत्रवरे प्रताने
स[2]कोशलोऽभूद् विषयः प्रधानः॥ १

रत्नोरुसाला चलकेतुलोला
रथ्याविशाला जिनगेहमाला।
नरेन्द्रलीला धृतरत्नमाला
साकेतसंज्ञा रचिता सुरेशा॥ २

तस्यां नगर्यां जितदेवपुर्यां
सपूर्णचर्यां प्रमदाब्धितर्याम्।
सलीलनार्यां परितोषकर्यां
श्रीनाभिराजो विरराज वर्यः॥ ३

मनुकुलपतिकान्ता देहलावण्यकान्ता
विधुकरसमशान्ता कीर्तिभागाप्तभान्ता।
पुरुजिनपतिमाता पूर्णविद्याब्धिपोता
गुणनुतमरुदेवी पुण्यराशिप्रजाता॥ ४

स[3]दरुणकिसलयचरणयुगेन
मृदुसरसिजजयधृतसुभगेन।
सा वनिता सुविराजिता
सुभगा वनितासु विराजिता॥ *१॥ ध्रुवपदम्।

१) आसजन = सबन्ध।

२) M सुकोशलाख्यो विषय।

३) A अष्टपद, B राग—बेगडे, S राग तोडिरागे।

वतुलकान्तिमृदूरुभरेण
चित्तजबाणधिवृत्तिधरेण ।
सा वनिता सुविराजिता
सुभगा वनितासु विराजिता ॥ ★२ ॥

मञ्जुलकाञ्चीवेषचयेन
पुञ्जितकान्तसुमध्यशुभेन ।
सा वनिता सुविराजिता
सुभगा वनितासु विराजिता ॥ ★३ ॥

नलिनसुबिसनिभभुजयुगलेन
दलितसुरतरुविटपचलेन ।
सा वनिता सुविराजिता
सुभगा वनितासु विराजिता ॥ ★४ ॥

विचलितहारविलासशिवेन
कुचयुगविलसदुरोविभवेन ।
सा वनिता सुविराजिता
सुभगा वनितासु विराजिता ॥ ★५ ॥

शशधररुचिधरसुषमसुखेन
विशदकुमुददलनयनसखेन ।
सा वनिता सुविराजिता
सुभगा वनितासु विराजिता ॥ ★६ ॥

अलिकुलकुन्तलभरनिटिलेन
विलसितशशिदलसमकुटिलेन ।
सा वनिता सुविराजिता
सुभगा वनितासु विराजिता ॥ ★७ ॥

कुण्डलमण्डितश्रुतियमलेन
खण्डितकुमतवचनसुबलेन ।
सा वनिता सुविराजिता
सुभगा वनितासु विराजिता ॥ *८ ॥

सुरूपलावण्यविशुद्धकान्ति-
श्रीमद्विभूत्यादिगुणै शचीर्व ।
जनेक्षणानन्दविधायिनी सा
विराजिता कोमलसारसाक्षी ॥ ५

केयूरवेषादिविभूषिताङ्गा
पीयूषपूरस्रववत्प्रसगा ।
पतिव्रताद्युद्धगुणौघसगा
विभासिता कान्तिपयस्तरङ्गा ॥ ६

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे मरुदेवीवर्णनो नाम
पञ्चदश. प्रबन्धः ॥ १५ ॥

## [ १६ ]

यक्षेश्वरो देवपतेर्निदेशात्
सार्धत्रिकोटिप्रमितानि पूर्वम् ।

---

४) B गुणै प्रभूतै । महत्सुखानन्दविधायनाना बिराजिता ।
पृ ५) B र for सार ।

रत्नानि संध्यात्रितये ऽपि माभ्यः
षड्भ्यो ववर्ष क्षितिपाङ्गणेषु ॥ १

ऐषैकदा[1] पुष्पवतीशमाता[2]
गङ्गादिसत्तीर्थपवित्रतोयैः ।
संस्नापिता शिष्टसुराङ्गनाभि·
शिश्ये निजेशा सह भूषिताङ्गा ॥ २

शुभ्राम्बरा शुभ्रसुभूषशोभा
शुभ्रेद्धपुष्पव्रजमाल्यभारा ।
शुभ्रच्छदस्त्रीसमलीलयाना
शुभ्रांशुकच्छादितमञ्चयाता ॥ ३

मनोहराख्ये वरतूर्ययामे
स्वप्नान् शुभान् सा समपश्यदेतान् ।
गजाधिपादीन्वृषभेश्वरस्य
प्रतापशान्तादिगुणप्रकाशान् ॥ ४

मदजलधृतसुरकरिसितसद्भिं[3]
सदमलकलरवपाण्डुरवृषभम् ।
वीक्षिता[4] हरिवीक्षिता
लोकविनुतपादकमला ॥ *१ ॥ ध्रुवपदम् ।

---

१) B om verses Nos 2 and 3

२) पुष्पवती + ईशमाता ।

३) A अष्टपद, B राग–रागमालिके ।

४) M alone adds हरिवीक्षिता after वीक्षिता in all the verses.

अरुणजटाधृतमृगपतिममलं
करियुगस्नापितवरतनुकमलम् ।
वीक्षिता हरिवीक्षिता
लोकविनुतपादकमला ॥ *२ ॥

सुरभिभरितसुममालायुगलं
किरणविभासितशशधरममलम् ।
वीक्षिता हरिवीक्षिता
लोकविनुतपादकमला ॥ *३ ॥

निरसिततिमिरकरविमतितिग्मं[५]
सरसि विलासितमीनकयुग्मम् ।
वीक्षिता हरिवीक्षिता
लोकविनुतपादकमला ॥ *४ ॥

चन्दनचर्चितकुम्भसुयमल
नन्दितसरसिजवापीमतलाम् ।
वीक्षिता हरिवीक्षिता
लोकविनुतपादकमला ॥ *५ ॥

तरङ्गविलोलितजलधिममान
करिरिपुततिधृतपीठं भानम्[६] ।
वीक्षिता हरिवीक्षिता
लोकविनुतपादकमला ॥ *६ ॥

---

५) तिमिरक-रवि ।

६) B पीठसुभानम्, M पीठविभानम् ।

भूम्यवतारितनागविमानं
व्योमाभासितदेवखयानम् ।
वीक्षिता हरिवीक्षिता
लोकविनुतपादकमला ॥ *७ ॥

सरसिजमरकतवरमणितानं
विरहितधूमकमग्निनिधानम् ।
वीक्षिता हरिवीक्षिता
लोकविनुतपादकमला ॥ *८ ॥

स्वप्नेक्षणातुष्टविशिष्टचित्ता
रोमाञ्चकप्राञ्चितदिव्यगात्रा ।
शुभ्राम्बरभ्राजितसत्कलत्रा
विराजिता लोलकुरङ्गनेत्रा ॥ *९ ॥

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे षोडशस्वप्नवर्णनो नाम
षोडश प्रबन्धः ॥ १६ ॥

[ १७ ]

विलीननिद्रां च विभाततूर्यां
कलारवव्यापितकर्णशोभाम् ।
प्रबोधयामासुरिति प्रभात-
प्रशस्तपाठै सुरवन्दिदेवाः ॥ *१ ॥

---

७) A सुरुचिर for सरसिज ।

[1]विदलितसरसिजविरचितसाञ्जलि वागमदिह सुविभातं
सदमलकरविधुं[2] धरति रजनी निजमुखमिव लसकान्तम् ।
लोकविनतचरणाम्बुरुहे विमलानघसुगुणसमूहे
देवि ललितशयनं मृदु मुञ्च सुकोमलतरशुभदेहे ॥ *१ ॥

ध्रुवपदम् ।

विगलितकिरणकलापकलाधरलोकनजनितविषादं
जगदभिनन्दय तावकवदनसद्विधुना कारय मोदम् ।
लोकविनतचरणाम्बुरुहे विमलानघसुगुणसमूहे ।
देवि ललितशयनं मृदु मुञ्च सुकोमलतरशुभदेहे ॥ *२ ॥

मन्दकरैरिव दिग्वनितास्पृशदिन्दुः[3] प्रवसितो भाति
मन्द्रध्वनियुतसारसवृन्द स्तुवदिव त्वामभिरौति ।
लोकविनतचरणाम्बुरुहे विमलानघसुगुणसमूहे
देवि ललितशयन मृदु मुञ्च सुकोमलतरशुभदेहे ॥ *३ ॥

विरलिततारातिरिव रजनी त्रुटितसुमुक्ताहारं
[4]सुरवभ्रमररवव्याजान्नलिनी स्तौति हि ते गुणसारम् ।
लोकविनतचरणाम्बुरुहे विमलानघसुगुणसमूहे
देवि ललितशयनं मृदु मुञ्च सुकोमलतरशुभदेहे ॥ *४ ॥

रजनीविरहदग्धचक्राह्वययुगमनति सरस्सु तरङ्गं
रजनीपतिविहतकोकमिथुनमभिवाञ्छति मित्रमभागम् ।

---

१) A अष्टपद, B राग-बिलहरि ।

२) A comm. सदमलशशिनं ।

३) A comm. स्पृशद्विधु ।

४) A वरित, but in the comm सुरव ।

लोकविनतचरणाम्बुरुहे विमलानघसुगुणसमूहे
देवि ललितशयनं मृदु मुञ्च सुकोमलतरशुभदेहे ॥ *५ ॥

चरणायुधध्वनिरनलनिकर इव दहति विटाङ्ककुटीरं
सरसिजगन्धवहत्परितो ऽपि संवाति सुगन्धसमीरम्[५] ।
लोकविनतचरणाम्बुरुहे विमलानघसुगुणसमूहे
देवि ललितशयनं मृदु मुञ्च सुकोमलतरशुभदेहे ॥ *६ ॥

[६]सुरदिग्वधूदरविसरदर्भकवदुदेति विसरकरसूरः ।
करततिसेना प्रसरति पुरत एष्यद्दिनेशसारः ।
लोकविनतचरणाम्बुरुहे विमलानघसुगुणसमूहे
देवि ललितशयन मृदु मुञ्च सुकोमलतरशुभदेहे ॥ *७ ॥

विकसितवदनां वीक्ष्य कमलिनीमेत्युत्पलिनी म्लानिं
माकन्दमधुरसपपिकगणो ऽयं तनुते पञ्चमगानम् ।
लोकविनतचरणाम्बुरुहे विमलानघसुगुणसमूहे
देवि ललितशयनं मृदु मुञ्च सुकोमलतरशुभदेहे ॥ *८ ॥

इत्थ प्रबुद्धा सुरबन्दिपाठा-
रवैः प्रभातक्रियया विनीता ।
अवोचदेत्य प्रमदामलाङ्गी
श्रीनाभिराजस्य समीपमेषा ॥ २

करिवृषहरिपद्माः पुष्पमाले च सोमं
रविशफरयुगे सत्कुम्भयुग्म च वापीं

---

५) AM समीर ।
६) दिग्वधू + उदर ।

जलनिधिहरिपीठे नागलोक विमान
मणिगणमनल निर्धूममद्राक्षमीश ॥ ३

श्रुत्वा सतीवाचमुवाच राजा
देवि त्वया दृष्टगजाधिपाद्याः
वदन्ति तुङ्गादिगुणाभिराम
वृषाधिनाथ समवाप्स्यसीति ॥ ४

जितपिकमृदुवाणी नीलनागाभवेणी
विमलतरचरित्रा विश्वनारीपवित्रा ।
इति निजपतिवाचा संशयध्वान्तमोचा
श्रवसुखकृतपोषां श्रूयमाणा तुतोष ॥ ५

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे प्रभातवर्णनो नाम
सप्तदश प्रबन्ध. ॥१७॥

[ १८ ]

श्रूयादीन्द्रदेवीभिरुपास्यमाना
गर्भार्भकेनापि विराजमाना ।
स्वबन्धुवर्गेण सदेड्यमाना[1]
बभौ मरालप्रमदाभयाना[2] ॥ १

---

१) H सदेज्यमाना ।

२) प्रमदा + आभ–याना, H प्रमदेभयाना ।

चैत्राख्यमासे वरकृष्णपक्षे
सद्ब्रह्मयोगे नवमीदिनादौ ।
जज्ञे जिनेन्द्रो वृषभो महात्मा
सुरासुरेन्द्रार्चितपादपद्म ॥ २

गेहेषु शङ्खा प्रथमामराणां
भौमामराणा सदनेषु भेर्यः ।
ज्योतिष्कलोके पटुनादसिंहाः
स्वर्गेषु घण्टाः स्वयमेव रेणु ॥ ३

ज्ञात्वा सुरेन्द्रो जिनपस्य जन्म
स्वपीठकम्पप्रमुखोद्धचिह्नैः ।
सार्धं सुरेन्द्रैः ससुरैर्जिनेशो
जन्माभिषेक कुरुते स्म मेरौ ॥ ४

[3]नवनवतिदशशतसुयोजनविराजिते क्षितिभृति
विचलितजलवारः[4]
नवमणिसुशैलपतिसानुगतनिर्झरजलवदमराब्दकृतपूरः ।
बभौ चारुमेरौ भूषितसुधाशनसमूहे बभौ चारुमेरौ
बभौ जिनसवनपावने महदमितभासनोत्स्फार-
परिमलसुनिकरवाह ।
बभौ चारुमेरौ ॥ *१ ॥ ध्रुवपदम् ।

चूलिकामौलिधृतवरनरपराजितादिन्द्रमणिभूतिगमनशील

---

३) A अष्टपद, B रागमलयमारुत ।

४) वार = प्रवाह ।

५) A °ताद्रीन्द्रघृणिभृति but in the comm. in the text above

लीलया स्वाभिगतपरमजडतां जहासेव विशदतरजल्लोलः ।
बभौ चारुमेरौ भूषितसुधाशनसमूहे
बभौ जिनसवनपावने महदमितभासनोत्स्फारपरिमल-
सुनिकरवाहः ।
बभौ चारुमेरौ ॥ *२ ॥

भद्रशालादिवनतरुवसनशोभिते जिनपतनुरुचिविसरपूतः
भद्रतोयेन युतगगनसुतरङ्गिणीपरिहसितबिन्दुततिपातः ।
बभौ चारुमेरौ भूषितसुधाशनसमूहे
बभौ जिनसवनपावने महदमितभासनोत्स्फारपरिमल-
सुनिकरवाह ॥
बभौ चारुमेरौ ॥ *३ ॥

हसितसुरवासकैर्जिननिलयभासिते विशदतरसुतरङ्गफेन ।
लसदमलजलवाहपृथुलतरगमवेगसुविचलितदिविजवरसेन
बभौ चारुमेरौ भूषितसुधाशनसमूहे
बभौ जिनसवनपावने महदमितभासनोत्स्फारपरिमल-
सुनिकरवाहः ॥
बभौ चारुमेरौ ॥ *४ ॥

मुनिखचरसेवनाज्जिनवदभिराजिते कमलदलरुचिभरितधारः
कनदनघकङ्केलीकिसलयसुघृणिविसरविद्रुमाङ्कुरमिलितसारैः।
बभौ चारुमेरौ भूषितसुधाशनसमूहे
बभौ जिनसवनपावने महदमितभासनोत्स्फारपरिमल-
सुनिकरवाह. ।
बभौ चारुमेरौ ॥ *५ ॥

---

६) A विसर, but comm. निचय, B घृणिनिचयविसर; HS विसर ।

चरणचयपालितसुकुरुभूमिसेविते स्फटिकासनकिरणगौरः
वररत्नभूमितलकान्तिगणपूरणान्मणिकीर्णजलनिधि-
गभीर ।
बभौ चारुमेरौ भूषितसुधाशनसमूहे
बभौ जिनसवनपावने महदमितभासनोत्स्फारपरिमल-
सुनिकरवाह· ।
बभौ चारुमेरौ ॥ *६ ॥

कन्दरनिवासितामरयुगलसेविते ऽरुणमणिद्युतिशोण-
कान्त ।
सौन्दर्यनीलमणितलभानुमेलनाद्यामुनजलाभसुभगान्तः ।
बभौ चारुमेरौ भूषितसुधाशनसमूहे
बभौ जिनसवनपावने महदमितभासनोत्स्फारपरिमल-
सुनिकरवाहः ।
बभौ चारुमेरौ ॥ *७ ॥

प्रीणिताशेषसुररमणीयदेशके कुसुमरसपूर्णमधुसारः
शोणमणिमरकतद्योततति०याप्तसच्छुकनिवहसमरुचिर-
भारः ।
बभौ चारुमेरौ भूषितसुधाशनसमूहे
बभौ जिनसवनपावने महदमितभासनोत्स्फारपरिमल-
सुनिकरवाहः ।
बभौ चारुमेरौ ॥ *८ ॥

निःस्वेद विरँजो ऽमलं निरुपम क्षीराच्छरक्तान्वितं
सस्थानप्रथम सुवज्रवृषभप्रश्लिष्टनाराचकम् ।

---

७) B निरुजो, H निरजो ।

सौरूप्यं सहजोद्धगन्धभरित सल्लक्षणेनाङ्कितं
सद्वीर्यप्रियवाक्समेतमनघ दध्रे[८] शरीर प्रभु ॥ ५

सौवर्णगात्र. शतपत्रनेत्रो
दयाकलत्रस्त्रिजगत्पवित्र. ।
नाभीशपुत्रो नुतसच्चरित्रो
रेजे जिनेशः सुगुणैकपात्रम्[९] ॥ ६

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे भगवज्जन्माभिषेकवर्णनो
नामाष्टादश प्रबन्ध ॥ १८ ॥

## [ १९ ]

साक सुरेन्द्रप्रहितैः सुरौघै
समानरूपै समवेषधारैः ।
समानलीलै समसुप्रलापै-
र्भेजे जिनेशः स सदृग्वयस्कै ॥ १

वदनविजितचन्द्रो देहसत्कान्तिसान्द्रो
विनतसुरनरेन्द्रो विश्वपुण्यौघरुन्द्र ।
हृदयनतमुनीन्द्रो दिव्यवाणीसुमन्द्रो
जयतु पुरुजिनेन्द्रो विष्टरभ्राड्मृगेन्द्र ॥ २

---

८) A बभ्रे, but the com दध्रे ।

९) B पात्र ।

[1]नीलभृङ्गाञ्चितमेरुवदलिनिभलोलकुन्तलमकुटे ऽङ्गं
खेलाऌम्बितसुरतरुकुसुमसन्मालालङ्कृतमुत्तमाङ्गम् ।
दध्रे वृषभजिनो ललितामलघृणिभरितमनुपम-
शरीरम् ॥ *१ ॥ ध्रुवपदम् ।

सुललितवाणीक्रीडाचलनिभमिलितसुषमनिटिलेरं
अलियुतकमलजदलनिभताराकलितनयनयुगधारम् ।
दध्रे वृषभजिनो ललितामलघृणिभरितमनुपम-
शरीरम् ॥ *२ ॥

चण्डकिरणविधुमण्डलवियदिव कुण्डलिश्रवयुगभास
पिण्डितशशिसरसिजसमशुभगुणमण्डितवदनविलासम् ।
दध्रे वृषभजिनो ललितामलघृणिभरितमनुपम-
शरीरम् ॥ *३ ॥

मञ्जुलचम्पककुसुमसमायतरञ्जितनासासार
पुञ्जितनायकमणिगणराजितसिञ्जितवक्षोहारम् ।
दध्रे वृषभजिनो ललितामलघृणिभरितमनुपम-
शरीरम् ॥ *४ ॥

सगतसुरतरुविटपद्वितयलसदङ्गधृतभुजयमलं
मङ्गलदेवीहससरस्सुभगंगतनाभिसदमलम् ।
दध्रे वृषभजिनो ललितामलघृणिभरितमनुपम-
शरीरम् ॥ *५ ॥

---

१) A अष्टपद । वसतरागे, B राग-सिंहेन्द्रमध्यम ।

२) B मालालकरणोत्तमाङ्गम् ।

शरदम्बुदाञ्चितमेरुनितम्बवदुरुमेखलसुनितम्ब
परमान्दोलास्तम्भयुगायतसरसोरुद्वयबिम्बम् ।
दध्रे वृषभजिनो ललितामलघृणिभरितमनुपमशरीरम् ॥ *६ ॥

स्मरसुमनङ्गजबन्धार्गलसमपुरुजङ्घायुगलेर
परमजगच्छ्रीभाग्यगृहायितचरणनलिनयुगभारम् ।
दध्रे वृषभजिनो ललितामलघृणिभरितमनुपमशरीरम् ॥ *७ ॥

हीरवृषभनाराचसकील[3]नसारतरास्थिसघात
घोरविषासिधनजयदोषजवारविबाधाधातम् ।
दध्रे वृषभजिनो ललितामलघृणिभरितमनुपमशरीरम् ॥ *८ ॥

साराधारविसारगौररुचिराकाराभराराजिता-
क्षीरापूरितवारिधीरसलसद्धारेण विभ्राजितः ।
लीलालम्बनलम्बितामलचलन्माल्येन सल्लालित
[4]चञ्चत्काञ्चनपञ्चनाञ्चितरणन्मञ्जीरसिञ्जान्वितः ॥ ३

सहजरुचिरलीले यौवनेनाप्तलोलो
विमलचरितमूल सौम्यकारुण्यशील ।
सदमलगुणजालो भातमन्दारमालो
मनुकुलमनुपालो व्यारुचन्नाभिबाल ॥ ४

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ गीत-
वीतरागे भगवत्परमौदारिकदिव्यदेहवर्णनो
नामैकोनविंशतितम प्रबन्ध ॥ १९ ॥

---

३) मर्कोलित ।
४) पञ्चन = (?) विस्तार ।

[ २० ]

चन्द्रानने सर्वकलाप्रपूर्णे
चन्द्रार्कसंकाशविभाललाटे ।
इन्दीवराक्ष्यौ सुयशस्वतीसौ-
नन्दे हि जाते पुरुदेवरामे ॥ १

अथैकदा श्रीवृषभेश्वरोऽसौ
महासभाया हरिविष्टरस्थः ।
सुतैर्वृतोऽभाद्भरतेश्वराद्यै
पूर्वाद्रितिष्ठद्विधुवत्सतारः ॥ २

सुमुकुरनिभगण्डा चन्द्रबिम्बाभतुण्डां
नवरससुकरण्डां नर्तने सुप्रचण्डाम् ।
घृणिजलधितरण्डां लोलनीलाञ्जनाख्या
दिविजपतिरपीशो बोधनाय ह्यनीनटत् ॥ ३

नीलाञ्जनात्यल्पनिजेप्सितायु-
र्विद्युल्लतावद्विससार सद्यः ।
दृष्ट्वावधिज्ञानविलोचनोऽसौ
निनिन्द संसारशरीरभोगान् ॥ ४

[२]प्रविचलिततडिदिव शरारुदेहे
इह कष्टमलनिचितमांसगेहे ।
दुरनुरागं मा कलय देहिन् ॥ *१ ॥ ध्रुवपदम् ।

१) A com B तोऽभूद्भ ।
२) A अष्टपद, B राग-भैरवि ।
३) शरारु = नाशशील ।

[४]विशररुचिधृतसांध्यकान्तिसरणे
इह कष्टनशनयौवनसुभरणे ।
दुरनुराग मा कलय देहिन् ॥ *२ ॥

विकसवनकुसुमसमनाशशीले
इह कष्टविकलितशुभातिलोले ॥
दुरनुराग मा कलय देहिन् ॥ *३ ॥

तनयपरिजननिचयबन्धमूले
इह कष्टघनदुरितघोरजाले ।
दरनुराग मा कलय देहिन् ॥ *४ ॥

मरणवनचरनिकरभीमगहने
इह कष्टजरणवनदावदहने ।
दुरनुरागं मा कलय देहिन् ॥ *५ ॥

स्वरचितसुरकृतबहुदु.खभरिते
इह कष्टनरकगतिविपुलदुरिते ।
दुरनुरागं मा कलय देहिन् ॥ *६ ॥

चर्मकुलभरितपृथुपूतिसदने
इह कष्टधर्महृतधूर्तमदने ।
दुरनुराग मा कलय देहिन् ॥ *७ ॥

स्त्रीतनुजमलिनसुखमिलितवासे
इह कष्टजातनिजकुशलनाशे ।
दुरनुराग मा कलय देहिन् ॥ *८ ॥

---

४) विशर = नाशशील ।

नरकजनितदुःख सर्वतिर्यग्जदुःखं
मनुजजननदुःख देवलोकान्त्यदुःखम् ।
मरणसमयदुःख सम्यगालोच्य चित्ते
पुरुजिनपतिरार्यः कामभोगे व्यरसीत् ॥ ५

[४]भोगा भोगिजभोगवद्विषधराः प्राणापहारा भुवि
संपच्चापि हि सांध्यरागसुभगा विद्युत्प्रभाचञ्चला ।
आयुष्य तृणसंचयाग्रजलवत्पातोन्मुखं प्राणिनां
सौख्य वाञ्छसि जीव तत्र किमहो मोहग्रहाक्रान्तवान् ॥६

अलब्धपर्याप्तकमुख्ययोनिषु
भ्रमन् भ्रमन् दुःखनिवासभूमिषु ।
जातो ऽस्मि सत्तीर्थकरत्वपुण्यो
मुह्यामि चेद् व्यर्थफलं प्रपद्ये ॥ ७

इतीह वैराग्यपरे जिनेशे
नैर्ग्रन्थ्यमाप्तुं कृतमानसे हि ।
तथैव सारस्वतवह्निमुख्या
आजग्मुरत्यन्तसुरेज्यमानाः ॥ ८

लौकान्तिकाभिख्यसुरर्षिदेवा
समीपमागत्य सुगन्धिपुष्पैः ।
अभ्यर्च्य तत्पादपयोजयुग्म
तुष्टावुरेतस्य गुणानुरक्ता ॥ ९

---

४) A भोगिसुभोग but com भोगिजभोग ।

अष्टादशद्विर्जलधीद्धकोटि-
मितेषु कालेषु गतेषु देव ।
नष्टं सुधर्मं पुनराविरेतुं[५]
कालो ऽयमेवात्र न संशयो ऽस्ति ॥ १०

इत्युक्त्वा निजकार्यमेतदखिलं लौकान्तिकास्ते गताः
पश्चाच्छ्रीवृषभेश्वरः स भगवान् द्वैगुण्यवैराग्यवान् ।
प्राप्ताभीष्टमतेन देवपतिना दीक्षाभिषेकीकृतो
देवो मङ्गलभूषणाञ्चिततनुर्जातो निजात्मप्रियः ॥ ११

रत्नैः कृतां सच्छिबिकामधिष्ठ
सिद्धार्थसन्नामवनं प्रविष्टः ।
तन्मध्यदेशस्थशिलासुपट्टे[६]
निर्ग्रन्थरूपं स दधे विशिष्टः ॥ १२

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे भगवद्वैराग्यवर्णनो नाम
विंशतितमः प्रबन्धः ॥ २० ॥

[ २१ ]

आजानुकालम्बितदीर्घबाहु-
र्दयासुधासारसुपूर्णदेहः ।

---

५) M पुनराविशेति ।
६) B पीठे, M घट्टे ।

[1]नासाग्रविन्यस्तसुलोचनेहः
सर्वार्थसंदोहविचारकोहः ॥ १

षण्मासपर्यन्तकृतोपवास-
स्तपोवनाभोगधृताधिवास ।
निजाङ्घ्रिप्रसनम्रसुरासुरेशः
तस्थौ निजध्यानभरे मुनीश ॥ २

[2]जिनतनुजनितसुभानुविततिततवनसदवनिघनदेशे
मुनिपतिपद्वनजाननिभफलविनतसुवननरुकाशे ।
स दधौ योगमसममुदारं
[3]विदलितमदनकुविभुबलविनिचयविनमदमरपतिवार.
॥ ★१ ॥ ध्रुवपदम् ।

विरहितघोरतरक्षकनखधृतकरिशिशुनिकरविभासे
हरिवनितोदरजनितार्भकगणक्षीरदकरिणीकाशे ।
स दधौ योगमसममुदारं
विदलितमदनकुविभुबलविनिचयविनमदमरपतिवार ॥★२॥

पुष्करिणीमुपगम्य सुभक्त्या पुष्करकुसुममादाय
पुष्करसुमसमजिनचरणार्चितपुष्करधरसमुदाये[4] ।

---

१) विचारक + ऊह ।
२) A अष्टपद, B राग-काबोधि ।
३) A com विभुज for कुविभु ।
४) A वर, but com धर, पुष्करधर – गज ।

स दधौ योगमसममुदारं
विदलितमदनकुविभुबलविनिचयविनमदमरपरिवारः ॥*३॥

क्रूरकण्टकलग्नरोमनिचयचमरीरुहधृतमृगजाल-
घोराखिलनिवारणसमुदितसारसदयहरिलीले ।
स दधौ योगमसममुदार
विदलितमदनकुविभुबलविनिचयविनमदमरपरिवारः ॥*४॥

दरमीलितदृष्टिमृगशिशुप्रकटितपुरुजिनशान्तविताने
सुरुचिरशान्तरसापूरिततनुहरिणारिनिकरनिधाने
स दधौ योगमसममुदारं
विदलितमदनकुविभुबलविनिचयविनमदमरपरिवार ॥*५॥

अगनिभजिनपदवनजसुपूजनविगलितसुमतरुभाने
विगतदुरितमुनिसदमलगुणकुलसुगमनुतिमधुपगाने ५ ।
स दधौ योगमसममुदार
विदलितमदनकुविभुबलविनिचयविनमदमरपरिवार ॥*६॥

चित्तजजयिजिनशान्तगुणायतचित्तवदहिगणरासे
मत्तमयूरारब्धकलापसुनर्तनतानविलासे ।
स दधौ योगमसममुदार
विदलितमदनकुविभुबलविनिचयविनमदमरपरिवार· ॥*७॥

गुञ्जनिवासितसुरवनितेरितमञ्जुलजिननुतिगौरे
पुञ्जितकुसुमपरागविराजितकञ्जसरोवरवारे ।
स दधौ योगमसममुदारं
विदलितमदनकुविभुबलविनिचयविनमदमरपरिवार ॥*८॥

५) H गुणकुलललितरौति मधुगाने ।

वर्षान् सहस्रान्प्रमितान् स कृत्वा
तपो ऽतिघोरं जिनकल्पयोगम् ।
श्रेय कुमारेण वितीर्णभक्तो
विहार्य देशान् जिनप कदाचित् ॥ २

परमपुरिमतालस्यान्तिके सर्वशोभे
कुसुमितशकटाख्योद्यानके प्लक्षमूले ।
पुरुजिनपतिरीशः पूर्वदिक्सम्मुखोऽसौ
दुरितरिपुवितानं ध्यानखड्गैर्जघान ॥ ३

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतो
गीतवीतरागे भगवत्तपो ऽतिशयवर्णनो
नामैकविंशतितम प्रबन्ध ॥ २१ ॥

## [ २२ ]

घातिप्ररूढाम्बुधरौघनाशे
कैवल्यसत्कान्तिजिनेन्द्रभानौ ।
प्रकाशमाने सति देवराजो
विज्ञाय कैवल्यसमुद्भवं सः ॥ १

दत्त्वा मुदाज्ञां धनदस्य जैनीं
सभां सुदिव्या रचनाभिरामाम् ।
समस्तभव्यालिपदावगाह्यां
त्व कारयेति प्रजिघाय देवेट् ॥ २

---

१) H प्रविधाय, M प्रविजिगाय, S प्रविजधाय ।

सकलभुवनभव्यप्राणिवृन्देन वन्द्य
कुमतिरचितहेतुस्वागमाद्यैरनिन्द्यम् ।
जिनपतिपदसेवातत्परैराभिनन्द्यं
समवसरणमेतन्निर्मिणोति स्म वित्तेट् ॥ ३

गजाधिरूढैर्वृषभेशभक्तै-
सौधर्मवर्यप्रणुतामरेशैः ।[२]
स्तुतिप्रसक्तैः सुफलाढ्यहस्तै-
र्व्यलोकि सर्वज्ञसभा सुभार्ता[३] ॥ ४

[४]सारामलमणिविसरविसरदमराधिपचापसुलील[५]
द्वारोपान्तविराजिततोरणपूरितधूलीसालम् ।
विरराज सकलहर्षकर सुरनरहृदयंगमवासं
जिनपतिसमवसरणमतिरुचिरविलासम् ॥*१॥ ध्रुवपदम् ॥

पञ्चितकिरणसुपूरितसुरुचिरसचितशोभनसग
काञ्चनरूपधृतायतपरिलसदञ्चितवेदियुगाङ्कम् ।
विरराज सकलहर्षकर सुरनरहृदयगमवास
जिनपतिसमवसरणमतिरुचिरविलासम् ॥ *२ ॥

भूरिमहामणिहारचयाञ्चिततोरणबहिरन्तरालं
द्वारचतुष्टयगोपुरभूषितसारारुणमणिसालम् ।

---

२) A com and B गजाधिवाहै पुरुभक्तिभाजै सौधर्मवर्यप्रमुखामरेशै ।
३) M शुभार्ता ।
४) A अष्टपद, B रागमध्यमावति ।
५) B सुशील ।

विरराज सकलहर्षकर सुरनरहृदयङ्गमवास
जिनपतिसमवसरणमतिरुचिरविलासम् ॥ *३ ॥

सरससुनर्तननिपुणनिवेशनसुरगणिकाजनखेल
[७]शरदम्बुदनिभगौरत्रिधराभृतवरनाटकशुभशालम् ।
विरराज सकलहर्षकरं सुरनरहृदयङ्गमवास
जिनपतिसमवसरणमतिरुचिरविलासम् ॥ *४ ॥

पुरुमणिमालामङ्गलतोरणसुरनवनिधिचयभास
निरुपमकान्तसुहेममयेरितसुललितवेदिविकासम् ।
विरराज सकलहर्षकर सुरनरहृदयङ्गमवास
जिनपतिसमवसरणमतिरुचिरविलासम् ॥ *५ ॥

नवनिधिमाल्यसुमङ्गलतोरणनिवहविलोलितधार[८]
धवलचतुर्गोपुरशिखरान्वितनवशालावृतिसारम् ।
विरराज सकलहर्षकर सुरनरहृदयङ्गमवासं
जिनपतिसमवसरणमतिरुचिरविलासम् ॥ *६ ॥

सुललितमणिमयमालामङ्गलकुलचितद्वारविशालं
विलसदमलतनुगगनविचुम्बितकलधौतवेदिसुवेलम् ।[९]
विरराज सकलहर्षकर सुरनरहृदयङ्गमवासं
जिनपतिसमवसरणमतिरुचिरविलासम् ॥ *७॥

---

६) B नैपुण्यवेशन, M नैपुण्यनिवेशन ।
७) A शरदब्द, BM शरदब्ध ।
८) B विलोलन ।
९) H काञ्चन for कलधौत ।

मरकतमणिकृतदण्डविधूनकरसुरदौवारिककान्तं
सरसिजमणिगोपुरचितस्फटिकवरणावृतसदुपान्तम् ।
विरराज सकलहर्षकर सुरनरहृदयङ्गमवास
जिनपतिसमवसरणमतिरुचिरविलासम् ॥ *८ ॥

[10]धूलीशालोरुखाता कनकमयमहावेदिकायुग्मभासा
रत्नप्राकारवेषा मितसुरगणिकानाट्यशालाविभूषा
वेदीद्धा रूप्यशाला नटनसुरवधूनाट्यशाला सुवेदी-
स्फाटिक्यप्राशुशाला समवसरणभू' पातु नः सर्वकालम् ॥५

सोपानराजिप्रविराजमाना
भृङ्गारतालादिविभासमाना ।
भौमामरादिप्रतिहारभाना
जैनी सभा पातु नतान् सदा नः ॥ ६

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे भगवत्समवसरणसालवेदिवर्णनो
नाम द्वाविंशतितम प्रबन्ध ॥ २२ ॥

## [ २३ ]

मानस्तम्भजिनालयौघनिचित सत्खातिकाप्रावृत
वल्लीभूमिविराजितं जिनतरूपेतैर्वनैरन्वितम् ।
नागादिध्वजभासित सुरतरुस्तोमेन सशोभित
हर्म्यैर्द्वादशकोष्ठकैर्विलसित जैन सदः पातु नः ॥ १

---

१०) A खाता, com कासा, काशा ।

सरोवरैः सत्सलिलैर्लतान्तक-
प्रशस्तगेहैः कृतशैलराजिभि ।
ध्वजैः सरिद्भिः सुरगीतकैः स्तवै-
र्विराजित नः प्रतिपातु सत्सद ॥ २

[1]तुङ्गसुगोपुरभासितकाञ्चनमानस्तम्भनिधानं
मङ्गलसधृतचैत्यपदायतजैननिवासविभानम् ।[2]
व्यरुचदनर्घ्यामलमणिमयसमवसरणभूतलम् ॥ ध्रुवपदम् ।

विमलतटाश्रितहंसनिवहकृतशोभनरावविराज-
दमितकमलकुमुदालिविलोलितजलधृतभूमिविभागम् ।
व्यरुचदनर्घ्यामलमणिमयसमवसरणभूतलम् ॥ *२ ॥

मञ्जुलगुञ्जन्मधुकरसेवितरञ्जितकुसुमविकास
व्यञ्जितवल्लीमण्डपलीनसुपुञ्जितकुसुमकुभासम् ।
व्यरुचदनर्घ्यामलमणिमयसमवसरणभूतलम् ॥ *३ ॥

अलिशुककोकिलकेकीसुरवखगकुलकलकूजनराग
कलिलविजयजिनप्रतिमाततत‍रुललितसदुपवनभागम् ।
व्यरुचदनर्घ्यामलमणिमयसमवसरणभूतलम् ॥ *४ ॥

करिवृषस्रग्वसनाम्बुजहंसकहरिशिखिचक्रविशिष्टं
गरुडनिचितमणिस्तम्भधृतध्वजधरणीभागगरिष्ठम् ।
व्यरुचदनर्घ्यामलमणिमयसमवसरणभूतलम् ॥ *५ ॥

अनुपमसिद्धप्रतिमाधिष्ठितघनतरबुध्नप्रदेश
विनतसुरासुरपूजितसुरतरुवनधरणीसुनिवेशम् ।
व्यरुचदनर्घ्यामलमणिमयसमवसरणभूतलम् ॥ *६ ॥

---

१) A अष्टपद, B राग-सुरटि ।

२) B प्रदायक for पदायत ।

अनघानन्तगुणाकरविधुरितजिनपतिचरणविनम्रं
जिननवकेवललब्धिसुसूचकसुनवस्तूपककम्रम् ।
व्यरुचदनर्घ्यामलमणिमयसमवसरणभूतलम् ॥ *७ ॥

जिनमुखविधुवीक्षणमुकुलितवनजाकरकसमानं
मुनिसुरनरमृगनिकरनिषेवितदिनमण्यश्मसुभानम् ।
व्यरुचदनर्घ्यामलमणिमयसमवसरणभूतलम् ॥ *८ ॥

त्रिमेखलालंकृतमुद्धरत्नै-
विनिर्मितं पीठमुदारकान्ति ।
बभौ सुमेरुः प्रभुपादसेवा-
कृते स्वभक्त्या स्वयमेव चायात् ॥ ३

चामीकरौघग्रथितप्रदेशं
सुरैः सहर्षात्प्रविसृष्टपुष्पैः ।
गन्धान्धमलीनमधुव्रतालिः
सौवर्णसत्कान्तिरिवाबभौ हि ॥ ४

शशिखरकिरणादिज्योतिरौघावृतत्वा-
त्सकलभुवनमध्योद्भासितत्वाच्च पीठम् ।
स्मरहरविभवस्योद्धारणाच्छ्रीजिनस्य
जगदधिकसुमेरोः सपद न्वकचकार ॥ ५

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे भगवत्समवसरणभूमिवर्णनो
नाम त्रयोविंशतितम
प्रबन्ध ॥ २३ ॥

---

३) AM करणाय for स्वयमेव ।

[ २४ ]

जिनेन्द्रदेहस्य निसर्गगन्धैः
सुराब्दसंसृष्टसुमौघगन्धैः ।
सुव्याप्तसद्धूपविशिष्टगन्धैः
सुगन्धभृद्गन्धकुटी चकाशे ॥ १

समस्तगन्धौघनिवासभूमि-
र्विश्वप्रकाशप्रसराधिदेवी ।
त्रैलोक्यशोभाप्रसवालयो वा
या सपद सर्वनुता स्म धत्ते ॥ २

तद्गन्धकुट्या बहुमध्यदेशे
विभासमाने मणिसिंहपीठे ।
हेमारविन्दस्य सुकर्णिकाया-
मस्पृष्टपादो जिनपो रराज ॥ ३

मणिघृणिमञ्जुलसजनितामरचापकलापकभासुरं
घृणिगणचुम्बितलम्बितचटुलितजटिलितकेसरिविष्टरम् ।
विरराज गन्धकुटीतले सेवितजनतालीले ॥ *१ ॥ ध्रुवपदम् ।

सुमरसगन्धसदन्यकमधुकरमधुररवौघसुपूरणं
अमरसुगङ्गासंगतरङ्गजलगतकुसुमसुवर्षणम् ।
विरराज गन्धकुटीतले सेवितजनतालीले ॥ *२ ॥

१) A अष्टपद, B रागमालिके ।
२) B पुञ्जित for मञ्जुलं ।
३) B om. चटुलित ।

अरुणकुसुमकिसलयचयचितसदशोकानोकहसौन्दरं
सुरवसुभृङ्गविहङ्गनिचयरुचिरुचिरविलासमन्दिरम्[४] ।
विरराज गन्धकुटीतले सेवितजनतालीले ॥ *३ ॥

सुरुचिरहिमकिरणे रणकिरणसुनिकरभरितविभासुर
वरमणिदण्डकमण्डितमौक्तिकमण्डलच्छत्रसुमेदुरम्[५] ।
विरराज गन्धकुटीतले सेवितजनतालीले ॥ *४ ॥

क्षीरसुवारिधिनीरमरालकराभसुगौरविपूर्णकं
सारसुसारसवीक्षणयक्षक्षिप्तवलक्षप्रकीर्णकम् ।
विरराज गन्धकुटीतल सेवितजनतालीले ॥ *५ ॥

मुदितभुजङ्गभुगङ्कविहङ्गविशङ्कितमेघरवेङ्गित
मृदुरवरङ्गमृदङ्गकदुन्दुभिमन्द्ररव हृदय गतम् ।
विरराज गन्धकुटीतले सेवितजनतालीले ॥ *६ ॥

सुरनरमुनिवरतनुकिरणविसरविसरणविजिताभिरामक
परमौदारोदारशरीरमुकरमण्डलमधिवामकम्[५] ।
विरराज गन्धकुटीतले सेवितजनतालीले ॥ *७ ॥

घनतरलोकालोकसुरूपनिरूपणगौरवभूषण
मुनिगणभव्यश्रव्यसुसेव्यकदिव्यमृदुनव्यघोषणम् ।
विरराज गन्धकुटीतले सेवितजनतालीले ॥ *८ ॥

योगीशाः सान्द्रबोधाः सुरवरवनिता. सार्यिकाः श्राविकाश्च
ज्योतिर्भौमोरगाणा प्रियतमवनिता भावना भौमदेवा ।

---

४) B om विलास । M चिरमनोज्ञविलास ।

५) B विभाभरसारम्, M विभाभार for मेदुरम् ।

५) वामक = मनोहरम् ।

ज्योति कल्पामरेन्द्रा नरमृगनिवहा भक्तिवन्दारुलोलाः
कोष्ठानि प्रावसन्ते पुरुजिनमभितः कुट्मलीभूतहस्ताः ॥ ३

सद्धर्मचक्रप्रतिभासमान
नागादिकाष्टध्वजराजमानम् ।
श्रीगन्धकुट्या परिशोभमान
त्रिमेखलापीठमभाद्विमानम् ॥ ४

इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ
गीतवीतरागे भगवदष्टमहाप्रातिहार्यवर्णनो नाम
चतुर्विंशतितम प्रबन्धः ॥ २४ ॥[६]

[ २५ ]

एवविधां दिव्यसभा जिनेशो
महार्घ्यरत्नग्रथिता धनेशा ।
समस्तभव्यप्रशमप्रदेशां
विशेषसस्तोत्रमुख सुरेश. ॥ १

त्रिमेखल पीठमथाधिगम्य
दिव्याम्बुगन्धाक्षतपुष्पहव्यैः ।
दीपैश्च धूपैश्च फलैः सदर्घ्यै-
रभ्यर्च्य तुष्टाव सुरेश इत्थम् ॥ २

---

६) H S have only 24 Prabandhas

चतुर्भिरभ्यस्तशतप्रमाण
गव्यूतिसुक्षेमजुषे नमस्ते ।
अभ्रे-विहाराय चतुर्मुखाय
प्रध्वस्तजीवौघनिबर्हणाय ॥ ३

उपद्रवाभावविभोजनाय
प्रशस्तविद्याविभवे नमस्ते ।
छायाविहीनाय समप्रसिद्ध-
नखोद्धकेशाय गुणाकराय ॥ ४

अस्पन्दनेत्रप्रविभूषणाय
घातिक्षयोत्थातिशयाय तुभ्यम् ।
सर्वार्थमन्मागधभाषणाय
समस्तजीवप्रियमित्रकाय ॥ ५

सर्वर्तुसत्पुष्पफलद्रुमाय
सत्समुखीनामलभूतलाय ।[1]
अन्वीयमानानिलभासनाय
निःशेषभव्यप्रमदाकराय ॥ ६

मरुत्सुरोद्यत्सुरभीरणाय[2]
सुगन्धिमेघामरवर्षणाय ।
सद्दब्धहेमाम्बुजसञ्चयाय
शाल्यादिसस्याततभूमिकाय ॥ ७

---

१) समुखीन = आदर्श ।
२) सुरभि + ईरणाय ।

शरत्सरोवद्विमलाभ्रकाय
सुनिर्मलीभूतदिगाननाय ।
परस्पराहूतसुरध्वनाय
निरस्तसूर्यद्युतिचक्रकाय ॥ ८

अनन्तबोधामलरत्नसिन्धवे
समस्तभव्याम्बुरुहाब्जबन्धवे ।
धर्मामृतस्यन्दनतुष्टजन्तवे
नमो नमस्ते हतदुष्टकन्तवे ॥ ९

इत्थ सुरेशा नुतपादपद्म
सहस्रपत्राञ्चितपद्मसद्म ।
विहृत्य देशान् स सुकोशलादीन्
संहृत्य वैहारविधिं कदाचित् ॥ १०

माघाख्यमासे वरकृष्णपक्षे
चतुर्दशीशस्ततिथौ दिनादौ ।
कैलासशैले हतकर्मशत्रु-
र्जगाम मोक्ष वृषभो जिनेशः ॥ ११

सम्यक्त्वज्ञानदृष्टिस्फुरदवगहनानन्तवीर्यप्रभावः
सूक्ष्माढ्यो ऽगुरुलघ्वबाधगुणसतमो ऽमलो निश्चलः ।
निर्द्वन्द्वो निरुपद्रवो निरुपमो निर्धूतकर्मद्रमो
निर्लेपो निरघो निरञ्जनवरः सिद्धः सदा पातु नः ॥ १२

गाङ्गेयवशाम्बुधिपूर्णचन्द्रो
यो देवराजो ऽजनि राजपुत्रः ।
तस्यानुरोधेन च गीतवीत-
रागप्रबन्ध मुनिपश्चकार । १३

द्राविडदेशविशिष्टे सिंहपुरे लब्धशस्तजन्मासौ ।
बेळगुळपण्डितवर्यश्चक्रे श्रीवृषभनाथवरचरितम् ॥ १४

स्वस्ति श्रीबेळगुळदोर्बलिजिननिकटे कुन्दकुन्दान्वयेनो
भूस्तुत्यः पुस्तकाङ्क श्रुतगुणभरण ख्यातदेशीगणार्यः ।
विस्तीर्णाशेषरीतिप्रगुणरसभृत गीतयुग्वीतराग
शस्तादीशप्रबन्ध बुधनुतमतनोत्पण्डिताचार्यवर्यः ॥ १५

इति[3] श्रीमद्रायराजगुरुभूमण्डलाचार्यवर्यमहावादवादीश्वररायवादि-
पितामह-सकलविद्वज्जनचक्रवर्तिबल्लाळरायजीवरक्षापालकेत्या-
द्यनेकविरुदावलिविराज ( मान ) श्रीमद्बेळगुळ-सिद्ध-
सिंहासनाधीश्वरश्रीमदभिनवचारुकीर्ति-पण्डिता-
चार्यवर्यप्रणीतगीतवीतरागाभिधाना[4]-
ष्टपदी समाप्ता ।

३) This colophon is copied from A M ends there:
इति श्रीमदभिनवचारुकीर्तिपण्डिताचार्यवर्यस्य कृतौ प्रणीत गीतवीत-
रागाभिधानाष्टपदीव्याख्यान समाप्तम् ।
Then there is the colophon of the copyist.

४) A समाप्त . But at the and of the here text in A समाप्ता
[ निर् ] विघ्नमस्तु । भद्र भवतु ।

# INDEX OF VERSES

●

Please correct and read

| | |
|---|---|
| ७.१ *a* | तत्रैव |
| १५.१ *a* | जम्बूद्रमासजन |
| १५.*२ *a* | वर्तुलकान्ति |
| १६.*९ | ॥ ५ ॥ |
| १७ *१ | ॥ १ ॥ |
| १८.२ | चैत्राख्यमासे |
| १९.*१ | नीलभृङ्गाञ्चित |
| २१.२ *d* (p 59) | ॥ ३ |
| २१ ३ *d* (p 59) | ॥ ४ |

●